.. Amarakosha Thesaurus Chapter 1 ..

# ॥ अमरकोश एवं नामलिङ्गाऽनुशासनं खाण्ड १ ॥

श्रीः॥

नामलिङ्गानुशासनं नाम अमरकोषः ।

प्रथमं काण्डम्।

मङ्गलाचरणम्।

(१.०.१) यस्य ज्ञानदयासिंधोरगाधस्यानघा गुणाः
(१.०.२) सेव्यतामक्षयो धीराः स श्रिये चामृताय च

प्रस्तावना।

(१.०.३) समाहृत्यान्यतन्त्राणि संक्षिप्तैः प्रतिसंस्कृतैः
(१.०.४) संपूर्णमुच्यते वर्गैर्नामलिङ्गानुशासनम्

परिभाषा।

(१.०.५) प्रायशो रूपभेदेन साहचर्याच्च कुत्रचित्
(१.०.६) स्त्रीपुंनपुंसकं ज्ञेयं तद्विशेषविधेः क्वचित्
(१.०.७) भेदाख्यानाय न द्वन्द्वो नैकशेषो न संकरः
(१.०.८) कृतोऽत्र भिन्नलिङ्गानामनुक्तानां क्रमादृते
(१.०.९) त्रिलिङ्ग्यां त्रिष्विति पदं मिथुने तु द्वयोरिति
(१.०.१०) निषिद्धलिङ्गं शेषार्थं त्वन्ताथादि न पूर्वभाक्

स्वर्गवर्गः।

Heaven 9
(१.१.११) स्वरव्ययं स्वर्गनाकत्रिदिवत्रिदशालयाः
(१.१.१२) सुरलोको द्योदिवौ द्वे स्त्रियां क्लीबे त्रिविष्टपम्
Deities 26
(१.१.१३) अमरा निर्जरा देवास्त्रिदशा विबुधाः सुराः
(१.१.१४) सुपर्वाणः सुमनसस्त्रिदिवेशा दिवौकसः
(१.१.१५) आदितेया दिविषदो लेखा अदितिनन्दनाः
(१.१.१६) आदित्या ऋभवोऽस्वप्ना अमर्त्या अमृतान्धसः
(१.१.१७) बर्हिर्मुखाः क्रतुभुजो गीर्वाणा दानवारयः
(१.१.१८) वृन्दारका दैवतानि पुंसि वा देवताः स्त्रियाम्
Some clans of deities
(१.१.१९) आदित्यविश्ववसवस्तुषिताभास्वरानिलाः
(१.१.२०) महाराजिकसाध्याश्च रुद्राश्च गणदेवताः
Some demigods
(१.१.२१) विद्याधराप्सरोयक्षरक्षोगन्धर्वकिंनराः
(१.१.२२) पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः
Antigods or titans 10
(१.१.२३) असुरा दैत्यदैतेयदनुजेन्द्रारिदानवाः
(१.१.२४) शुक्रशिष्या दितिसुताः पूर्वदेवाः सुरद्विषः
Jina or Buddha 18
(१.१.२५) सर्वज्ञः सुगतः बुद्धो धर्मराजस्तथागतः
(१.१.२६) समन्तभद्रो भगवान्मारजिल्लोकजिज्जिनः
(१.१.२७) षडभिज्ञो दशबलोऽद्वयवादी विनायकः
(१.१.२८) मुनीन्द्रः श्रीघनः शास्ता मुनिः शाक्यमुनिस्तु यः
Gautama Buddha 7
(१.१.२९) स शाक्यसिंहः सर्वार्थसिद्धः शौद्धोदनिश्च सः
(१.१.३०) गौतमश्चार्कबन्धुश्च मायादेवीसुतश्च सः
Brahma 29
(१.१.३१) ब्रह्मात्मभूः सुरज्येष्ठः परमेष्ठी पितामहः
(१.१.३२) हिरण्यगर्भो लोकेशः स्वयंभूश्चतुराननः
(१.१.३३) धाताब्जयोनिर्द्रुहिणो विरिञ्चिः कमलासनः
(१.१.३४) स्रष्टा प्रजापतिर्वेधा विधाता विश्वसृग्विधिः
(१.१.३५) नाभिजन्माण्डजः पूर्वो निधनः कमलोद्भवः
(१.१.३६) सदानन्दो रजोमूर्तिः सत्यको हंसवाहनः
Vishnu 46
(१.१.३७) विष्णुर्नारायणः कृष्णो वैकुण्ठो विष्टरश्रवाः
(१.१.३८) दामोदरो हृषीकेशः केशवो माधवः स्वभूः
(१.१.३९) दैत्यारिः पुण्डरीकाक्षो गोविन्दो गरुडध्वजः
(१.१.४०) पीताम्बरोऽच्युतः शार्ङ्गी विष्वक्सेनो जनार्दनः
(१.१.४१) उपेन्द्र इन्द्रावरजश्चक्रपाणिश्चतुर्भुजः
(१.१.४२) पद्मनाभो मधुरिपुर्वासुदेवस्त्रिविक्रमः
(१.१.४३) देवकीनन्दनः शौरिः श्रीपतिः पुरुषोत्तमः
(१.१.४४) वनमाली बलिध्वंसी कंसारातिरधोक्षजः
(१.१.४५) विश्वम्भरः कैटभजिद्विधुः श्रीवत्सलाञ्छनः
(१.१.४६) पुराणपुरुषो यज्ञपुरुषो नरकान्तकः
(१.१.४७) जलशायी विश्वरूपो मुकुन्दो मुरमर्दनः
Vasudeva: Krishna's Father 2
(१.१.४८) वसुदेवोऽस्य जनकः स एवानकदुन्दुभिः
Balarama 17
(१.१.४९) बलभद्रः प्रलम्बघ्नो बलदेवोऽच्युताग्रजः
(१.१.५०) रेवतीरमणो रामः कामपालो हलायुधः

(१.१.५१) नीलाम्बरो रौहिणेयस्तालाङ्को मुसली हली
(१.१.५२) संकर्षणः सीरपाणिः कालिन्दीभेदनो बलः
Kamadeva: Eros 19
(१.१.५३) मदनो मन्मथो मारः प्रद्युम्नो मीनकेतनः
(१.१.५४) कंदर्पो दर्पकोऽनङ्गः कामः पञ्चशरः स्मरः
(१.१.५५) शम्बरारिर्मनसिजः कुसुमेषुरनन्यजः
(१.१.५६) पुष्पधन्वा रतिपतिर्मकरध्वज आत्मभूः
Five floral Arrows of Kamadeva
(१.१.५७) अरविन्दमशोकं च चूतं च नवमल्लिका
(१.१.५८) नीलोत्पलं च पञ्चैते पञ्चबाणस्य सायकाः
Five physical arrows of Kamadeva
(१.१.५९) उन्मादनस्तापनश्च शोषणः स्तम्भनस्तथा
(१.१.६०) संमोहनश्च कामश्च पञ्च बाणाः प्रकीर्तिताः
Son of kamadeva 4
(१.१.६१) ब्रह्मसूर्विश्वकेतुः स्यादनिरुद्ध उषापतिः
Laxmi 14
(१.१.६२) लक्ष्मीः पद्मालया पद्मा कमला श्रीर्हरिप्रिया
(१.१.६३) इन्दिरा लोकमाता मा क्षीरोदतनया रमा
(१.१.६४) भार्गवी लोकजननी क्षीरसागरकन्यका
Krishna's equipment: conch, discus, mace, sword,jewel
(१.१.६५) शङ्खो लक्ष्मीपतेः पाञ्चजन्यश्चक्रं सुदर्शनः
(१.१.६६) कौमोदकी गदा खड्गो नन्दकः कौस्तुभो मणिः
Krishna's bow, mark, horses(4)
(१.१.६७) चापः शार्ङ्गं मुरारेस्तु श्रीवत्सो लाञ्छनं स्मृतम्
(१.१.६८) अश्वाश्च शैव्यसुग्रीवमेघपुष्पबलाहकाः
Krishna's charioteer, minister, younger brother
(१.१.६९) सारथिर्दारुको मन्त्री ह्युद्धवश्चानुजो गदः
Garuda: Krishna's vehicle 9
(१.१.७०) गरुत्मान्गारुडस्ताक्ष्र्यो वैनतेयः खगेश्वरः
(१.१.७१) नागान्तको विष्णुरथः सुपर्णः पन्नगाशनः
Shiva 52
(१.१.७२) शम्भुरीशः पशुपतिः शिवः शूली महेश्वरः
(१.१.७३) ईश्वरः शर्व ईशानः शंकरश्चन्द्रशेखरः
(१.१.७४) भूतेशः खण्डपरशुर्गिरीशो गिरिशो मृडः
(१.१.७५) मृत्युञ्जयः कृत्तिवासाः पिनाकी प्रमथाधिपः
(१.१.७६) उग्रः कपर्दी श्रीकण्ठः शितिकण्ठः कपालभृत्
(१.१.७७) वामदेवो महादेवो विरूपाक्षस्त्रिलोचनः
(१.१.७८) कृशानुरेताः सर्वज्ञो धूर्जटिर्नीललोहितः
(१.१.७९) हरः स्मरहरो भर्गस्त्र्यम्बकस्त्रिपुरान्तकः
(१.१.८०) गङ्गाधरोऽन्धकरिपुः क्रतुध्वंसी वृषध्वजः
(१.१.८१) व्योमकेशो भवो भीमः स्थाणू रुद्र उमापतिः
(१.१.८२) अहिर्बुध्न्योऽष्टमूर्तिश्च गजारिश्च महानटः

Shiva's braided hair, bow, attendants, divine mothers
(१.१.८३) कपर्दोऽस्य जटाजूटः पिनाकोऽजगवं धनुः
(१.१.८४) प्रमथाः स्युः पारिषदा ब्राह्मीत्याद्यास्तु मातरः
Shiva's powers/glory 3
(१.१.८५) विभूतिर्भूतिरैश्वर्यमणिमादिकमष्टधा
Eight Yogic achievements granted by Shiva
(१.१.८६) अणिमा महिमा चैव गरिमा लघिमा तथा
(१.१.८७) प्राप्तिः प्राकाम्यमीशित्वं वशित्वं चाष्ट सिद्धयः
Shiva's wife Parvati 23
(१.१.८८) उमा कात्यायनी गौरी काली हैमवतीश्वरी
(१.१.८९) शिवा भवानी रुद्राणी शर्वाणी सर्वमङ्गला
(१.१.९०) अपर्णा पार्वती दुर्गा मृडानी चण्डिकाम्बिका
(१.१.९१) आर्या दाक्षायणी चैव गिरिजा मेनकात्मजा
(१.१.९२) कर्ममोटी तु चामुण्डा चर्ममुण्डा तु चर्चिका
Shiva's son Ganapati 8
(१.१.९३) विनायको विघ्नराजद्वैमातुरगणाधिपाः
(१.१.९४) अप्येकदन्तहेरम्बलम्बोदरगजाननाः
Shiva's son Kartikeya 17
(१.१.९५) कार्तिकेयो महासेनः शरजन्मा षडाननः
(१.१.९६) पार्वतीनन्दनः स्कन्दः सेनानीरग्निभूर्गुहः
(१.१.९७) बाहुलेयस्तारकजिद्विशाखः शिखिवाहनः
(१.१.९८) षाण्मातुरः शक्तिधरः कुमारः क्रौञ्चदारणः
Shiva's vehicle: Nandi Bull 6
(१.१.९९) शृङ्गी भृङ्गी रिटिस्तुण्डी नन्दिको नन्दिकेश्वरः
Indra 35
(१.१.१००) इन्द्रो मरुत्वान्मघवा बिडौजाः पाकशासनः
(१.१.१०१) वृद्धश्रवाः सुनासीरः पुरुहूतः पुरन्दरः
(१.१.१०२) जिष्णुर्लेखर्षभः शक्रः शतमन्युर्दिवस्पतिः
(१.१.१०३) सुत्रामा गोत्रभिद्वज्री वासवो वृत्रहा वृषा
(१.१.१०४) बास्तोष्पतिः सुरपतिर्बलारातिः शचीपतिः
(१.१.१०५) जम्भभेदी हरिहयः स्वाराण्नमुचिसूदनः
(१.१.१०६) संक्रन्दनो दुश्च्यवनस्तुराषाण्मेघवाहनः
(१.१.१०७) आखण्डलः सहस्राक्ष ऋभुक्षास्तस्य तु प्रिया
Indra's wife Shachi 3, city 1
(१.१.१०८) पुलोमजा शचीन्द्राणी नगरी त्वमरावती
Indra's horse, charioteer, son, garden, palace, son(2)

(१.१.१०९) हय उच्चैःश्रवा सूतो मातलिर्नन्दनं वनम्
(१.१.११०) स्यात्प्रासादो वैजयन्तो जयन्तः पाकशासनिः
Indra's vehicle: elephant (4), thunderbolt (10)
(१.१.१११) ऐरावतोऽभ्रमातङ्गैरावणाऽभ्रमुवल्लभाः
(१.१.११२) ह्रादिनी वज्रमस्त्री स्यात् कुलिशं भिदुरं पविः

(१.१.११३) शतकोटिः स्वरुः शम्बो दम्भोलिरशनिर्द्वयोः

Airplane (2), divine sages, council (2), nectar (3)

(१.१.११४) व्योमयानं विमानोऽस्त्री नारदाद्याः सुरर्षयः

(१.१.११५) स्यात् सुधर्मा देवसभा पीयूषममृतं सुधा

Divine river: Milky way (4), Golden mountain Meru (5)

(१.१.११६) मन्दाकिनी वियद्गङ्गा स्वर्णदी सुरदीर्घिका

(१.१.११७) मेरुः सुमेरुर्हेमाद्री रत्नसानुः सुरालयः

Five divine trees

(१.१.११८) पञ्चैते देवतरवो मन्दारः पारिजातकः

(१.१.११९) सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम्

Sanatkumara (2), divine doctors: ashvins (6), nymphs (2)

(१.१.१२०) सनत्कुमारो वैधात्रः स्वर्वैद्यावश्विनीसुतौ

(१.१.१२१) नासत्यावश्विनौ दस्रावाश्विनेयौ च तावुभौ

(१.१.१२२) स्त्रियां बहुष्वप्सरसः स्वर्वेश्या उर्वशीमुखाः

Divine musicians (2), Fire (34), Marine fire (3)

(१.१.१२३) हाहा हूहूश्चैवमाद्या गन्धर्वास्त्रिदिवौकसाम्

(१.१.१२४) अग्निर्वैश्वानरो वह्निर्वीतिहोत्रो धनञ्जयः

(१.१.१२५) कृपीटयोनिर्ज्वलनो जातवेदास्तनूनपात्

(१.१.१२६) बर्हिः शुष्मा कृष्णवर्त्मा शोचिष्केश उपर्बुधः

(१.१.१२७) आश्रयाशो बृहद्भानुः कृशानुः पावकोऽनलः

(१.१.१२८) रोहिताश्वो वायुसखः शिखावानाशुशुक्षणिः

(१.१.१२९) हिरण्यरेता हुतभुग् दहनो हव्यवाहनः

(१.१.१३०) सप्तार्चिर्दमुनाः शुक्रश्चित्रभानुर्विभावसुः

(१.१.१३१) शुचिरप्पित्तमौर्वस्तु वाडवो वडवानलः

Flame (5), Spark (2), Burn (2)

(१.१.१३२) वह्नेर्द्वयोर्ज्वालकीलावर्चिर्हेतिः शिखाः स्त्रियाम्

(१.१.१३३) त्रिषु स्फुलिङ्गोऽग्निकणः संतापः संज्वरः समौ

Meteor (1), Ash (5), Forest fire (3)

(१.१.१३४) उल्का स्यात् निर्गतज्वाला भूतिर्भसितभस्मनी

(१.१.१३५) क्षारो रक्षा च दावस्तु दवो वनहुताशनः

Yama: god of death (14)

(१.१.१३६) धर्मराजः पितृपतिः समवर्ती परेतराट्

(१.१.१३७) कृतान्तो यमुनाभ्राता शमनो यमराड् यमः

(१.१.१३८) कालो दण्डधरः श्राद्धदेवो वैवस्वतोऽन्तकः

(१.१.१३९) राक्षसः कोणपः क्रव्यात् क्रव्यादोऽस्रप आशरः

Giant, demon (15)

(१.१.१४०) रात्रिञ्चरो रात्रिचरः कर्बुरो निकषात्मजः

(१.१.१४१) यातुधानः पुण्यजनो नैर्ऋतो यातुरक्षसी

Varuna: god of the sea (5)

(१.१.१४२) प्रचेता वरुणः पाशी यादसांपतिरप्पतिः

Vayu: (god of the) wind (20)

(१.१.१४३) श्वसनः स्पर्शनो वायुर्मातरिश्वा सदागतिः

(१.१.१४४) पृषदश्वो गन्धवहो गन्धवाहाऽनिलाऽऽशुगाः

(१.१.१४५) समीरमारुतमरुत् जगत्प्राणसमीरणाः

(१.१.१४६) नभस्वद्वातपवनपवमानप्रभञ्जनाः

Whirlwind, storm

(१.१.१४७) प्रकम्पनो महावातो झञ्झावातः सवृष्टिकः

Five bodily winds in Ayurvedic classification, speed (5)

(१.१.१४८) प्राणोऽपानः समानश्चोदानव्यानौ च वायवः

(१.१.१४९) शरीरस्था इमे रंहस्तरसी तु रयः स्यदः

(१.१.१५०) जवोऽथ शीघ्रं त्वरितं लघु क्षिप्रमरं द्रुतम्

Quickly (11)

(१.१.१५१) सत्वरं चपलं तूर्णमविलम्बितमाशु च

Eternal (9), Excessive (14)

(१.१.१५२) सततेऽनारताऽश्रान्तसंततविरतानिशम्

(१.१.१५३) नित्याऽनवरताऽजस्रमप्यथाऽतिशयो भरः

(१.१.१५४) अतिवेलभृशाऽत्यर्थाऽतिमात्रोद्गाढनिर्भरम्

(१.१.१५५) तीव्रैकान्तनितान्तानि गाढबाढदृढानि च

(१.१.१५६) क्लीबे शीघ्राऽऽद्यसत्त्वे स्यात् त्रिष्वेषां सत्त्वगामि यत्

Kubera: god of wealth (17)

(१.१.१५७) कुबेरस्त्र्यम्बकसखो यक्षराड् गुह्यकेश्वरः

(१.१.१५८) मनुष्यधर्मा धनदो राजराजो धनाधिपः

(१.१.१५९) किन्नरेशो वैश्रवणः पौलस्त्यो नरवाहनः

(१.१.१६०) यक्षैकपिङ्गैलविलश्रीदपुण्यजनेश्वराः

Kubera's garden, son, place, city, attendants (4)

(१.१.१६१) अस्योद्यानं चैत्ररथं पुत्रस्तु नलकूबरः

(१.१.१६२) कैलासः स्थानमलका पूर्विमानं तु पुष्पकम्

(१.१.१६३) स्यात् किन्नरः किम्पुरुषस्तुरङ्गवदनो मयुः

Treasure (2), the list of nine treasures is below:

(१.१.१६४) निधिर्नाशेवधिर्भेदाः पद्मशङ्खाऽऽदयो निधेः

(१.१.१६५) महापद्मश्च पद्मश्च शङ्खो मकरकच्छपौ

(१.१.१६६) मुकुन्दकुन्दनीलाश्च खर्वश्च निधयो नव

व्योमवर्गः।

Sky or atmosphere (26)

(१.२.१६७) द्योदिवौ द्वे स्त्रियामभ्रं व्योम पुष्करमम्बरम्

(१.२.१६८) नभोऽन्तरिक्षं गगनमनन्तं सुरवर्त्म खम्

(१.२.१६९) वियद् विष्णुपदं वा तु पुंस्याकाशविहायसी

(१.२.१७०) विहासयोऽपि नाकोऽपि द्युरपि स्यात् तदव्ययम्

(१.२.१७१) तारापथोऽन्तरिक्षं च मेघाध्वा च महाबिलम्

(१.२.१७२) विहायाः शकुने पुंसि गगने पुंनपुंसकम्

दिग्वर्गः।

Directions or quarters (5), four directions or quarters,belonging to a direction

(१.३.१७३) दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः
(१.३.१७४) प्राच्यवाचीप्रतीच्यस्ताः पूर्वदक्षिणपश्चिमाः
(१.३.१७५) उत्तरादिगुदीची स्याद्दिश्यं तु त्रिषु दिग्भवे

Belonging to respective direction or quarter

(१.३.१७६) अवाग्भवमवाचीनमुदीचीचीनमुदग्भवम्
(१.३.१७७) प्रत्यग्भवं प्रतीचीनं प्राचीनं प्राग्भवं त्रिषु

Respective lords of the eight directions

(१.३.१७८) इन्द्रो वह्निः पितृपतिर्नैरृतो वरुणो मरुत्
(१.३.१७९) कुबेर ईशः पतयः पूर्वाऽऽदीनां दिशां क्रमात्

Respective planets associated to the eight directions

(१.३.१८०) रविः शुक्रो महीसूनुः स्वर्भानुर्भानुजो विधुः
(१.३.१८१) बुधो बृहस्पतिश्चेति दिशां चैव तथा ग्रहाः

Respective elephants associated to the eight directions

(१.३.१८२) ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः
(१.३.१८३) पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः

Respective wives of the elephants

(१.३.१८४) करिण्योऽभ्रमुकपिलापिङ्गलाऽनुपमाः क्रमात्
(१.३.१८५) ताम्रकर्णी शुभ्रदन्ती चाऽङ्गना चाऽञ्जनावती

Sector between directions (2), Inner space (2), Horizon (2)

(१.३.१८६) क्लीबाऽव्ययं त्वपदिशं दिशोर्मध्ये विदिक् स्त्रियाम्
(१.३.१८७) अभ्यन्तरं त्वन्तरालं चक्रवालं तु मण्डलम्

Cloud (15), line of clouds (2),Belonging to clouds

(१.३.१८८) अभ्रं मेघो वारिवाहः स्तनयित्नुर्बलाहकः
(१.३.१८९) धाराधरो जलधरस्तडित्वान् वारिदोऽम्बुभृत्
(१.३.१९०) घनजीमूतमुदिरजलमुग्धूमयोनयः
(१.३.१९१) कादम्बिनी मेघमाला त्रिषु मेघभवेऽभ्रियम्

Thundering (3), Lightening (10), Thunderclap (2), Lightening flash (2)

(१.३.१९२) स्तनितं गर्जितम् मेघनिर्घोषे रसिताऽदि च
(१.३.१९३) शम्पा शतह्रदाह्रादिन्यैरावत्यः क्षणप्रभा
(१.३.१९४) तडित्सौदामिनी विद्युच्चञ्चला चपला अपि
(१.३.१९५) स्फूर्जथुर्वज्रनिर्घोषो मेघज्योतिरिरंमदः

Rainbow (3),

(१.३.१९६) इन्द्रायुधं शक्रधनुस्तदेव ऋजुरोहितम्

Rain (2), Drought (2), Continuous rain (2), Droplets

(१.३.१९७) वृष्टिवर्षं तद्विघातेऽवग्राहाऽवग्रहौ समौ
(१.३.१९८) धारासम्पात आसारः शीकरोम्बुकणाः स्मृताः

Hail (2), Cloudy day

(१.३.१९९) वर्षोपलस्तु करका मेघच्छन्नेऽह्नि दुर्दिनम्

Covering (8)

(१.३.२००) अन्तर्धा व्यवधा पुंसि त्वन्तर्धिरपवारणम्
(१.३.२०१) अपिधानतिरोधानपिधानाऽऽच्छादनानि च

Moon (20)

(१.३.२०२) हिमांशुश्चन्द्रमाश्चन्द्र इन्दुः कुमुदबान्धवः
(१.३.२०३) विधुः सुधांशुः शुभ्रांशुरोषधीशो निशापतिः
(१.३.२०४) अब्जो जैवातृकः सोमो ग्लौर्मृगाङ्कः कलानिधिः
(१.३.२०५) द्विजराजः शशधरो नक्षत्रेशः क्षपाकरः

Moon's sixteenth part, Full moon (2)

(१.३.२०६) कला तु षोडशो भागो बिम्बोऽस्त्री मण्डलं त्रिषु

Piece, part (4), Half

(१.३.२०७) भित्तं शकलखण्डे वा पुंस्यर्धोऽर्धं समेंशके

Moonlight (3), Purity or brightness (2)

(१.३.२०८) चन्द्रिका कौमुदी ज्योत्स्ना प्रसादस्तु प्रसन्नता

Mark or spot (6)

(१.३.२०९) कलङ्काङ्कौ लाञ्छनं च चिह्नं लक्ष्म च लक्षणम्

Exquisite beauty, Splendour (4)

(१.३.२१०) सुषमा परमा शोभा शोभा कान्तिर्द्युतिश्छविः

Snow or frost (7), Snowdrift, accumulated snow (2)

(१.३.२११) अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम्
(१.३.२१२) प्रालेयं मिहिका चाऽथ हिमानी हिमसंहतिः

Coldness, Cold (7)

(१.३.२१३) शीतं गुणे तद्वदर्थाः सुषीमः शिशिरो जडः
(१.३.२१४) तुषारः शीतलः शीतो हिमः सप्ताऽन्यलिङ्गकाः

Dhruva (2), Agastya (3), Agastya's wife (also star names)

(१.३.२१५) ध्रुव औत्तानपादिः स्यात् अगस्त्यः कुम्भसम्भवः
(१.३.२१६) मैत्रावरुणिरस्यैव लोपामुद्रा सधर्मिणी

Star or asterism (6), Names of the 27 constellations and their parts

(१.३.२१७) नक्षत्रमृक्षं भं तारा तारकाऽप्युडु वा स्त्रियाम्
(१.३.२१८) दाक्षायिण्योऽश्विनीत्यादितारा अश्वयुगश्विनी
(१.३.२१९) राधाविशाखा पुष्ये तु सिध्यतिष्यौ श्रविष्ठया
(१.३.२२०) समा धनिष्ठाः स्युः प्रोष्ठपदा भाद्रपदाः स्त्रियः
(१.३.२२१) मृगशीर्षं मृगशिरस्तस्मिन्नेवाऽऽग्रहायणी
(१.३.२२२) इल्वलास्तच्छिरोदेशे तारका निवसन्ति याः

Planet Jupiter (9)

(१.३.२२३) बृहस्पतिः सुराचार्यो गीष्पतिर्धिषणो गुरुः
(१.३.२२४) जीव आङ्गिरसो वाचस्पतिश्चित्रशिखण्डिजः

Planet Venus (6)

(१.३.२२५) शुक्रो दैत्यगुरुः काव्य उशना भार्गवः कविः

Planet Mars (5), Planet Mercury (3)

(१.३.२२६) अङ्गारकः कुजो भौमो लोहिताङ्गो महीसुतः

(१.३.२२७) रौहिणेयो बुधः सौम्यः समौ सौरिशनैश्वरौ
Rahu or the ascending node (5)
(१.३.२२८) तमस्तु राहुः स्वर्भानुः सैंहिकेयो विधुन्तुदः
Ursa major
(१.३.२२९) सप्तर्षयो मरीच्यत्रिमुखाश्चित्रशिखण्डिनः
Rising of the Zodiac signs(Lagna), The zodiac
(१.३.२३०) राशीनामुदयो लग्नं ते तु मेषवृषादयः
Sun (54)
(१.३.२३१) सूरसूर्यार्यमादित्यद्वादशात्मदिवाकराः
(१.३.२३२) भास्कराहस्करब्रध्नप्रभाकरविभाकराः
(१.३.२३३) भास्वद्विवस्वत्सप्ताश्वहरिदश्वोष्णरश्मयः
(१.३.२३४) विकर्तनार्कमार्तण्डमिहिरारुणपूषणः
(१.३.२३५) द्युमणिस्तरणिर्मित्रश्चित्रभानुर्विरोचनः
(१.३.२३६) विभावसुर्ग्रहपतिस्त्विषांपतिरहर्पतिः
(१.३.२३७) भानुर्हंसः सहस्रांशुस्तपनः सविता रविः
(१.३.२३८) पद्माक्षस्तेजसांराशिश्छायानाथस्तमिस्रहा
(१.३.२३९) कर्मसाक्षी जगच्चक्षुर्लोकबन्धुस्त्रयीतनुः
(१.३.२४०) प्रद्योतनो दिनमणिः खद्योतो लोकबान्धवः
(१.३.२४१) इनो भगो भामनिधिश्चांऽशुमाल्यब्जिनीपतिः
Sun's three attendants, Sun's son (5), Halo (4)
(१.३.२४२) माठरः पिङ्गलो दण्डश्चण्डांशोः परिपार्श्वकाः
(१.३.२४३) सूरसूतोऽरुणोऽनूरुः काश्यपिर्गरुडाग्रजः
(१.३.२४४) परिवेषस्तुपरिधिरुपसूर्यकमण्डले
Ray (11), Light or brightness (11), Sunlight (3)
(१.३.२४५) किरणोस्रमयूखांऽशुगभस्तिघृणिरश्मयः
(१.३.२४६) भानुः करो मरीचिः स्त्रीपुंसयोर्दीधितिः स्त्रियाम्
(१.३.२४७) स्युः प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः
(१.३.२४८) रोचिः शोचिरुभे क्लीबे प्रकाशो द्योत आतपः
Lukewarm (4), Very hot (4), Mirage (2)
(१.३.२४९) कोष्णं कवोष्णं मन्दोष्णं कदुष्णं त्रिषु तद्वति
(१.३.२५०) तिग्मं तीक्ष्णं खरं तद्वन्मृगतृष्णा मरीचिका

कालवर्गः।

Time (4), First (lunar calendar) day (2), Lunar day
(१.४.२५१) कालो दिष्टोऽप्यनेहापि समयोऽप्यथ पक्षतिः
Day (5), Morning (9), Evening (4)
(१.४.२५२) प्रतिपद् द्वे इमे स्त्रीत्वे तदाऽऽद्यास्तिथयो द्वयोः
(१.४.२५३) घस्रो दिनाऽहनी वा तु क्लीबे दिवसवासरौ
(१.४.२५४) प्रत्यूषोऽहर्मुखं कल्यमुषःप्रत्युषसी अपि
(१.४.२५५) व्युष्टं विभातं द्वे क्लीबे पुंसि गोसर्ग इष्यते
(१.४.२५६) प्रभातं च दिनान्ते तु सायं संध्या पितृप्रसूः
Three parts of the day, Night (12)
(१.४.२५७) प्राह्णापराह्णमध्याह्नास्त्रिसंध्यमथ शर्वरी
(१.४.२५८) निशा निशीथिनी रात्रिस्त्रियामा क्षणदा क्षपा
(१.४.२५९) विभावरी तमस्विन्यौ रजनी यामिनी तमी
Dark night, Moonlit night
(१.४.२६०) तमिस्रा तामसी रात्रिर्ज्यौत्स्नी चन्द्रिकयाऽन्विता
Night together with adjoining days
(१.४.२६१) आगामिवर्तमानार्हयुक्तायां निशि पक्षिणी
Collection of nights, Late evening (2)
(१.४.२६२) गणरात्रं निशा बह्व्यः प्रदोषो रजनीमुखम्
Midnight (2), A period of 3 hours (2)
(१.४.२६३) अर्धरात्रनिशीथौ द्वौ द्वौ यामप्रहरौ समौ
Join of fortnights, Last days of fortnights (20)
(१.४.२६४) स पर्वसंधिः प्रतिपत्पञ्चदश्योर्यदन्तरम्
Full moon day (2)
(१.४.२६५) पक्षान्तौ पञ्चदश्यौ द्वे पौर्णमासी तु पौर्णिमा
Night of the almost full moon, Night of the really full moon
(१.४.२६६) कलाहीने साऽनुमतिः पूर्णे राका निशाकरे
New moon day (4)
(१.४.२६७) अमावास्या त्वमावस्या दर्शः सूर्येन्दुसंगमः
Night mostly wihout moon, Night without any moon
(१.४.२६८) सा दृष्टेन्दुः सिनीवाली सा नष्टेन्दुकला कुहूः
Eclipse, Eclipsed Sun or Moon
(१.४.२६९) उपरागो ग्रहो राहुग्रस्ते त्विन्दौ च पूष्णि च
(१.४.२७०) सोपप्लवोपरक्तौ द्वौ अग्न्युत्पात उपाहितः
Sun and Moon
(१.४.२७१) एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ
Nimesha: Time needed for flickering of an eye
18 Nimesha = Kashtha, 30 Kashtha = Kala
(१.४.२७२) अष्टादश निमेषास्तु काष्टा त्रिंशत् तु ताः कला
30 Kala = Kshana, 12 Kshana = Muhurta
(१.४.२७३) तास्तु त्रिंशत् क्षणस्ते तु मुहूर्तो द्वादशाऽस्त्रियाम्
30 Muhurta = (Full) day (24 Hours), 15 Days = Paksha (fortnight)
(१.४.२७४) ते तु त्रिंशदहोरात्रः पक्षस्ते दशपञ्च च
First and second fortnight, 2 fortnights = (Lunar) Month
(१.४.२७५) पक्षौ पूर्वाऽपरौ शुक्लकृष्णौ मासस्तु तावुभौ
Two months = Ritu (season), 3 Ritus = Ayana (Semester)
(१.४.२७६) द्वौ द्वौ मार्गादि मासौ स्यादृतुस्तैरयनं त्रिभिः
2 Ayana = Year, Equinox
(१.४.२७७) अयने द्वे गतिरुदग्दक्षिणाऽर्कस्य वत्सरः
(१.४.२७८) समरात्रिदिवे काले विषुवद्विषुवं च तत्

Constellation names determine names for Full moon days and their months

For example, Pushya constellation names Paushi full moon night and Pausha month.

(१.४.२७९) पुष्पयुक्ता पौर्णमासी पौषी मासे तु यत्र सा

(१.४.२८०) नाम्ना स पौषो माघाऽऽद्याश्चैवमेकादशाऽपरे

Margashirsha (9 th month) (4), Pausha (10 th) (3)

(१.४.२८१) मार्गशीर्षे सहा मार्ग आग्रहायणिकश्च सः

(१.४.२८२) पौषे तैषसहस्यौ द्वौ तपा माघेऽथ फाल्गुने

Magha (11 th) (2) Falguna (12 th) (3), Chaitra (1 st ) (3)

(१.४.२८३) स्यात्तपस्यः फाल्गुनिकः स्याच्चैत्रे चैत्रिको मधुः

Vaishakh (2 nd ) (3), Jyeshtha (3 rd ) (2)

(१.४.२८४) वैशाखे माधवो राधो ज्येष्ठे शुक्रः शुचिस्त्वयम्

Ashadha (4 th) (2), Shravana (5 th) (3)

(१.४.२८५) आषाढे श्रावणे तु स्यान्नभाः श्रावणिकश्च सः

Bhadrapada (6 th) (4), Ashvin (7 th) (3)

(१.४.२८६) स्युर्नभस्यप्रौष्ठपदभाद्रभाद्रपदाः समाः

(१.४.२८७) स्यादाश्विन इषोऽप्याश्वयुजोऽपि स्यात्तुकार्तिके

Kartika (8 th) (4), Fall (Months 9-10), Winter (Months 11-12)

(१.४.२८८) बाहुलोर्जौ कार्तिकिको हेमन्तः शिशिरोऽस्त्रियाम्

Spring (Months 1-2) (3), Summer (Months 3-4) (7)

(१.४.२८९) वसन्ते पुष्पसमयः सुरभिर्ग्रीष्म ऊष्मकः

(१.४.२९०) निदाघ उष्णोपगम उष्ण ऊष्मागमस्तपः

Monsoon (Months 5-6) (2), Autumn (Months 7-8)

(१.४.२९१) स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षा अथ शरत्स्त्रियाम्

Season, Year (6)

(१.४.२९२) षडमी ऋतवः पुंसि मार्गादीनां युगैः क्रमात्

(१.४.२९३) संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत्समाः

Human Month = Ancestral day, Human year = Divine day

(१.४.२९४) मासेन स्यादहोरात्रः पैत्रो वर्षेण दैवतः

Human Yuga quartet = Divine Yuga, Divine 2000 Yuga = Brahma’s day = Human kalpa

(१.४.२९५) दैवे युगसहस्रे द्वे ब्राह्मः कल्पौ तु तौ नृणाम्

Manvantara = 71 Divine yuga

(१.४.२९६) मन्वन्तरं तु दिव्यानां युगानामेकसप्ततिः

Destruction of world (between epochs) (5)

(१.४.२९७) संवर्तः प्रलयः कल्पः क्षयः कल्पान्त इत्यपि

Sin (12), Virtue or merit (5)

(१.४.२९८) अस्त्री पङ्कं पुमान्पाप्मा पापं किल्बिषकल्मषम्

(१.४.२९९) कलुषं वृजिनैनोऽघमंहो दुरितदुष्कृतम्

(१.४.३००) स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः

Joy or happiness (12), Prosperity, blessing (12)

(१.४.३०१) मुत्प्रीतिः प्रमदो हर्षः प्रमोदाऽऽमोदसम्मदाः

(१.४.३०२) स्यादानन्दथुरानन्दः शर्मशातसुखानि च

(१.४.३०३) श्वः श्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम्

(१.४.३०४) भावुकं भविकं भव्यं कुशलं क्षेममस्त्रियाम्

(१.४.३०५) शस्तं चाऽथ त्रिषु द्रव्ये पापं पुण्यं सुखादि च

Excellent! (5), Good luck

(१.४.३०६) मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौ

(१.४.३०७) प्रशस्तवाचकान्यमून्ययः शुभाऽऽवहो विधिः

Destiny or luck (6), Cause (3), Root cause

(१.४.३०८) दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः

(१.४.३०९) हेतुर्ना कारणं बीजं निदानं त्वादिकारणम्

Soul (3), State (of body etc.), Three Qualities (of all things)

(१.४.३१०) क्षेत्रज्ञ आत्मा पुरुषः प्रधानं प्रकृतिः स्त्रियाम्

(१.४.३११) विशेषः कालिकोऽवस्था गुणाः सत्त्वं रजस्तमः

Birth (6), Living being (6)

(१.४.३१२) जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भवः

(१.४.३१३) प्राणी तु चेतनो जन्मी जन्तुजन्युशरीरिणः

Kind or type (3), Individuality, Mind (7)

(१.४.३१४) जातिर्जातं च सामान्यं व्यक्तिस्तु पृथगात्मता

(१.४.३१५) चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः

धीवर्गः।

Comprehension, intellect (14)

(१.५.३१६) बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः

(१.५.३१७) प्रेक्षोपलब्धिश्चित्संवित्प्रतिपज्ज्ञप्तिचेतनाः

Retentive intellect (1), Volition (1), Attention (3)

(१.५.३१८) धीर्धारणावती मेधा संकल्पः कर्म मानसम्

(१.५.३१९) अवधानं समाधानं प्रणिधानम् तथैव च

Awareness (2), Reflection (3), Reasoning (3), Doubt (4)

(१.५.३२०) चित्ताभोगो मनस्कारश्चर्चा संख्या विचारणा

(१.५.३२१) विमर्शो भावना चैव वासना च निगद्यते

(१.५.३२२) अध्याहारस्तर्क ऊहो विचिकित्सा तु संशयः

(१.५.३२३) संदेहद्वापरौ चाथ समौ निर्णयनिश्चयौ

Heresy or atheism (2), Malice (2), Conclusion or theorem (2), Delusion (3)

(१.५.३२४) मिथ्यादृष्टिर्नास्तिकता व्यापादो द्रोहचिन्तनम्

(१.५.३२५) समौ सिद्धान्तराद्धान्तौ भ्रान्तिर्मिथ्यामतिर्भ्रमः

Agreement (10)

(१.५.३२६) संविदागूः प्रतिज्ञानं नियमाश्रवसंश्रवाः

(१.५.३२७) अङ्गीकाराभ्युपगमप्रतिश्रवसमाधयः

Spiritual knowledge (1), Worldly or profane knowledge (1)

(१.५.३२८) मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोः

Salvation or liberation (8), Spiritual ignorance (4)

(१.५.३२९) मुक्तिः कैवल्यनिर्वाणश्रेयोनिःश्रेयसामृतम्

(१.५.३३०) मोक्षोऽपवर्गोऽथाज्ञानमविद्याऽहंमतिः स्त्रियाम्

(Listed) five sense objects (3), Sense organs (3), Intellectual organ (1)

(१.५.३३१) रूपं शब्दो गन्धरसस्पर्शाश्च विषया अमी

(१.५.३३२) गोचरा इन्द्रियार्थाश्च हृषीकं विषयीन्द्रियम्

(१.५.३३३) कर्मेन्द्रियं तु पाय्वादि मनोनेत्रादि धीन्द्रियम्

Astringent (2), Sweet (1), Salty (1)

(१.५.३३४) तुवरस्तु कषायोऽस्त्री मधुरो लवणः कटुः

Pungent (hot) (1), Sour (1), Tastes (all six) (1)

(१.५.३३५) तिक्तोऽम्लश्च रसाः पुंसि तद्वत्सु षडमी त्रिषु

Aroma (1), Extremely pleasant smell (1), Permeating smell (2)

(१.५.३३६) विमर्दोत्थे परिमलो गन्धे जनमनोहरे

(१.५.३३७) आमोदः सोऽतिनिर्हारी वाच्यलिङ्गत्वमागुणात्

(१.५.३३८) समाकर्षी तु निर्हारी सुरभिर्घ्राणतर्पणः

Aromatics (4), Breath-freshner (2), Foul smelling (2), Rotten (1)

(१.५.३३९) इष्टगन्धः सुगन्धिः स्यादामोदी मुखवासनः

(१.५.३४०) पूतिगन्धस्तु दुर्गन्धो विस्रं स्यादामगन्धि यत्

White (16), Grey (off-white) (2), Black or dark blue (7)

(१.५.३४१) शुक्लशुभ्रशुचिश्वेतविशदश्येतपाण्डराः

(१.५.३४२) अवदातः सितो गौरोऽवलक्षो धवलोऽर्जुनः

(१.५.३४३) हरिणः पाण्डुरः पाण्डुरीषत्पाण्डुस्तु धूसरः

(१.५.३४४) कृष्णे नीलासितश्यामकालश्यामलमेचकाः

Yellow (3), Green (3), Red (2), Crimson (1)

(१.५.३४५) पीतो गौरो हरिद्राभः पलाशो हरितो हरित्

(१.५.३४६) लोहितो रोहितो रक्तः शोणः कोकनदच्छविः

Light pink (1), Dark pink (1), Brown (2), Purple (3)

(१.५.३४७) अव्यक्तरागस्त्वरुणः श्वेतरक्तस्तु पाटलः

(१.५.३४८) श्यावः स्यात्कपिशो धूम्रधूमलौ कृष्णलोहिते

Tawny (6), variegated (6)

(१.५.३४९) कडारः कपिलः पिङ्गपिशङ्गौ कद्रुपिङ्गलौ

(१.५.३५०) चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे

Colors as words are masculine, as adjectives follow nouns

(१.५.३५१) गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति

## शब्दवर्गः ।

Talk or speech or language (13)

(१.६.३५२) ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती

(१.६.३५३) व्याहार उक्तिर्लपितं भाषितं वचनं वचः

Corrupted (or changed) speech (2), word (1), Sentence (1)

(१.६.३५४) अपभ्रंशोऽपशब्दः स्याच्छास्त्रे शब्दस्तु वाचकः

(१.६.३५५) तिङ् सुबन्तचयो वाक्यं क्रिया वा कारकान्विता

Vedas (scriptures) (4), Prescribed way of life (dharme) (1)

(१.६.३५६) श्रुतिः स्त्री वेद आम्नायस्त्रयी धर्मस्तु तद्विधिः

Three vedas (listed) (1), Subsidiary vedas (vedanga) (1), Om (2)

(१.६.३५७) स्त्रियामृक् सामयजुषी इति वेदास्त्रयस्त्रयी

(१.६.३५८) शिक्षेत्यादि श्रुतेरङ्गमोङ्कारप्रणवौ समौ

History (2), Vedic accents (1), Logic (1), Ethics (1)

(१.६.३५९) इतिहासः पुरावृत्तमुदात्ताद्यास्त्रयः स्वराः

(१.६.३६०) आन्वीक्षिकी दण्डनीतिस्तर्कविद्याऽर्थशास्त्रयोः

Tale (1), Epic story (1), Story (2), Riddle (2)

(१.६.३६१) आख्यायिकोपलब्धार्था पुराणं पञ्चलक्षणम्

(१.६.३६२) प्रबन्धकल्पना कथा प्रवह्लिका प्रहेलिका

Social code (Dharma) (1), Compendium (2)

(१.६.३६३) स्मृतिस्तु धर्मसंहिता समाहृतिस्तु संग्रहः

Poetic challenge line for completion (1), Rumor (2)

(१.६.३६४) समस्या तु समासार्था किंवदन्ती जनश्रुतिः

News (4), Name (6), Call or summons (3), Collective call (1)

(१.६.३६५) वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यादथाऽह्वयः

(१.६.३६६) आख्याह्वे अभिधानं च नामधेयं च नाम च

(१.६.३६७) हूतिराकारणाऽऽह्वानं संहूतिर्बहुभिः कृता

Dispute or debate (2), Preface or introduction (2)

(१.६.३६८) विवादो व्यवहारः स्यादुपन्यासस्तु वाङ्मुखम्

Illustration or example (2), Oath (2), Question (3), Answer (2)

(१.६.३६९) उपोद्घात उदाहारः शपनं शपथः पुमान्

(१.६.३७०) प्रश्नोऽनुयोगः पृच्छा च प्रतिवाक्योत्तरे समे

Groundless demand (2), False accusation (2), Rapture or roar (1)

(१.६.३७१) मिथ्याभियोगोऽभ्याख्यानमथ मिथ्याभिशंसनम्

(१.६.३७२) अभिशापः प्रणादस्तु शब्दः स्यादनुरागजः

Fame (3), Praise (4), Repetition (1), Shouting (2)

(१.६.३७३) यशः कीर्तिः समज्ञा च स्तवः स्तोत्रं स्तुतिर्नुतिः

(१.६.३७४) आम्रेडितं द्विस्त्रिरुक्तमुच्चैर्घुष्टं तु घोषणा

Trembling (of speech in stress) (1), Censure, blame or contempt (10)

(१.६.३७५) काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेः

(१.६.३७६) अवर्णाऽऽक्षेपनिर्वादपरीवादापवादवत्।

(१.६.३७७) उपक्रोशो जुगुप्सा च कुत्सा निन्दा च गर्हणे

Harsh speech (2), Reproach (1), Admonition or gossip (1)

(१.६.३७८) पारुष्यमतिवादः स्याद् भर्त्सनं त्वपकारगीः

(१.६.३७९) यः सनिन्द उपालम्भस्तत्र स्यात्परिभाषणम्

Accusation (of adultery) (1), Conversation (2), Rambling (speech) (1)

(१.६.३८०) तत्र त्वाक्षारणा यः स्यादाक्रोशो मैथुनं प्रति

(१.६.३८१) स्यादाभाषणमालापः प्रलापोऽनर्थकं वचः

repetitious speech (2), Lamentation (2)

(१.६.३८२) अनुलापो मुहुर्भाषा विलापः परिदेवनम्

Quarrel (2), Familiar or confidential conversation (1)

(१.६.३८३) विप्रलापो विरोधोक्तिः संलापो भाषणं मिथः

Good speech (2), Denial or excuse (2), Objection (3), Cursing (3)

(१.६.३८४) सुप्रलापः सुवचनमपलापस्तु निह्नवः

(१.६.३८५) चोद्यमाक्षेपाऽभियोगौ शापाऽक्रोशौ दुरेषणा

Sweet-talk (3), Message (2)

(१.६.३८६) अस्त्री चाटु चटु श्लाघा प्रेम्णा मिथ्याविकत्थनम्

(१.६.३८७) संदेशवाग्वाचिकं स्याद्वाग्भेदास्तु त्रिषूत्तरे

Following adjectives of speech take appropriate genders

Inauspicious (1), Auspicious (1), Very sweet (1), Proper or coherent (2)

(१.६.३८८) रुशती वागकल्याणी स्यात्कल्या तु शुभात्मिका

(१.६.३८९) अत्यर्थमधुरं सान्त्वं संगतं हृदयङ्गमम्

Harsh (2), Obscene or crude (2), Pleasing and true (1), Contradictory (2)

(१.६.३९०) निष्ठुरं परुषं ग्राम्यमश्लीलं सूनृतं प्रिये

(१.६.३९१) सत्येऽथ संकुलक्लिष्टे परस्परपराहते

Slurred (1), Fast (1), Sputtered (1), Meaningless (1)

(१.६.३९२) लुप्तवर्णपदं ग्रस्तं निरस्तं त्वरितोदितम्

(१.६.३९३) जम्बूकृतं सनिष्ठीवमबद्धं स्यादनर्थकम्

Inappropriate (2), Oxymoron (1), Sarcastic (2), Loving (1)

(१.६.३९४) अनक्षरमवाच्यं स्यादाहतं तु मृषार्थकम्

(१.६.३९५) सोल्लुठनं तु सोत्प्रासं मणितं रतिकूजितम्

Plain, pleasant, clear (5), Unclear or garbled (2), False (1)

(१.६.३९६) श्राव्यं हृद्यं मनोहारि विस्पष्टं प्रकटोदितम्

(१.६.३९७) अथ म्लिष्टमविस्पष्टं वितथं त्वनृतं वचः

True (4)

(१.६.३९८) सत्यं तथ्यमृतं सम्यगमूनि त्रिषु तद्वति

Sound (17), (Sound of) clothes or leaves (1)

(१.६.३९९) शब्दे निनादनिनदध्वनिध्वानरवस्वनाः

(१.६.४००) स्वाननिर्घोषनिर्ह्रादनादनिस्वाननिस्वनाः

(१.६.४०१) आरवाऽऽरावसंरावविरावा अथ मर्मरः

(Sound of) ornaments (1), (sound of) string instruments (5), Same but louder (2)

(१.६.४०२) स्वनिते वस्त्रपर्णानां भूषणानां तु शिञ्जितम्

(१.६.४०३) निक्वाणो निक्वणः क्वाणः क्वणः क्वणनमित्यपि

(१.६.४०४) वीणायाः क्वणिते प्रादेः प्रक्वाणप्रक्वणादयः

Uproar (2), Uproar by birds (1), Echo (2), Singing (2)

(१.६.४०५) कोलाहलः कलकलस्तिरश्चां वाशितं रुतम्

(१.६.४०६) स्त्री प्रतिश्रुत्प्रतिध्वाने गीतं गानमिमे समे

नाट्यवर्गः।

The seven notes. These are respectively natural sounds of:

Elephants, Cows, Goats, Peacocks, Curlews (kraun-cha), Horses, Cuckoos

In usual notation, these are: BDECFAG

Minute tone (1), Pleasing soft tone (1), Medium pitch (1), High pitch (1)

(१.७.४०७) निषादर्षभगान्धारषड्जमध्यमधैवताः

(१.७.४०८) पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वराः

(१.७.४०९) काकली तु कले सूक्ष्मे ध्वनी तु मधुराऽस्फुटे

(१.७.४१०) कलो मन्द्रस्तु गम्भीरे तारोऽत्युच्चैस्त्रयस्त्रिषु

In the stomach form 22 low tones (Shruti). They become medium or high pitched if made in throat or head.

(१.७.४११) नृणामुरसि मध्यस्थो द्वाविंशतिविधो ध्वनिः

(१.७.४१२) स मन्द्रः कण्ठमध्यस्थस्तारः शिरसि गीयते

Harmony (1), Lute (veena) (3), Seven stringed lute (1)

(१.७.४१३) समन्वितलयस्त्वेकतालो वीणा तु वल्लकी

(१.७.४१४) त्रिपञ्ची सा तु तन्त्रीभिः सप्तभिः परिवादिनी

String instrument (1), Drum instrument (1), Wind instrument (1), Bell or gong (1)

(१.७.४१५) ततं वीणाऽऽदिकं वाद्यमानद्धं मुरजाऽऽदिकम्

(१.७.४१६) वंशाऽऽदिकं तु सुषिरं कांस्यतालाऽऽदिकं घनम्

Any of these four instruments (2), Twofaced drum (2), Its three types

(१.७.४१७) चतुर्विधमिदं वाद्यं वादित्राऽऽतोद्यनामकम्

(१.७.४१८) मृदङ्गा मुरजा भेदास्त्वङ्क्याऽऽलिङ्ग्योर्ध्वकास्त्रयः

Large drum (2), Kettle drum (2), Large kettle drum (2), Bow (for playing string instrument) (1)

(१.७.४१९) स्याद् यशःपटहो ढक्का भेरी स्त्री दुन्दुभिः पुमान्

(१.७.४२०) आनकः पटहोऽस्त्री स्यात् कोणो वीणाऽऽदि वादनम्

Parts of the lute: Neck (1), The bowl (2)

(१.७.४२१) वीणादण्डः प्रवालः स्यात् ककुभस्तु प्रसेवकः

The body (1), String attachment (1)

(१.७.४२२) कोलम्बकस्तु कायोऽस्या उपनाहो निबन्धनम्

Six names of other special drums, (Female) dancer (2)

(१.७.४२३) वाद्यप्रभेदा डमरुमड्डुडिण्डिमझर्झराः

(१.७.४२४) मर्दलः पणवोऽन्ये च नर्तकीलासिके समे

Dancing speeds low, medium, high, Beating time(1), Musical pause or rest (1)

(१.७.४२५) विलम्बितं द्रुतं मध्यं तत्त्वमोघो घनं क्रमात्

(१.७.४२६) तालः कालक्रियामानं लयः साम्यमथाऽस्त्रियाम्

Dance (6), The musical arts (dance, song, instrument) (1)

(१.७.४२७) ताण्डवं नटनं नाट्यं लास्यं नृत्यं च नर्तने

(१.७.४२८) तौर्यत्रिकं नृत्यगीतवाद्यं नाट्यमिदं त्रयम्

Female impersonator dancer in drama (3), Courtesan (1)

(१.७.४२९) भ्रकुंसश्च भ्रुकुंसश्च भ्रूकुंसश्चेति नर्तकः

(१.७.४३०) स्त्रीवेषधारी पुरुषो नाट्योक्तौ गणिकाञ्जुका

Husband of sister (1), Learned man (1), Father (1), Prince (2)

(१.७.४३१) भगिनीपतिरावुत्तो भावो विद्वानथाऽऽवुकः

(१.७.४३२) जनको युवराजस्तु कुमारो भर्तृदारकः

King (2), Princess (1), Queen (1), Other wives of a king (1)

(१.७.४३३) राजा भट्टारको देवस्तत्सुता भर्तृदारिका

(१.७.४३४) देवी कृताभिषेकायामितरासु तु भट्टिनी

Interjection for a forbidden act (1), King's brother-in-law (1)

(१.७.४३५) अब्रह्मण्यमवध्योक्तौ राजश्यालस्तु राष्ट्रियः

Mother (1), Young lass (2), Venerable man (1), Catastrophe or end of drama (2)

(१.७.४३६) अम्बा माताऽथ बाला स्याद्वासूरार्यस्तु मारिषः

(१.७.४३७) अत्तिका भगिनी ज्येष्ठा निष्ठा निर्वहणे समे

Vocatives for different female servants (1) each, Gesture (2), Expressive gesture (2)

(१.७.४३८) हण्डे हञ्जे हलाऽऽह्वाने नीचां चेटीं सखीं प्रति

(१.७.४३९) अङ्गहारोऽङ्गविक्षेपो व्यञ्जकाऽभिनयौ समौ

Acting by body or expression (1), Eight types of emotions (rasa) listed

(१.७.४४०) निर्वृत्ते त्वङ्गसत्त्वाभ्यां द्वे त्रिष्वाङ्गिकसात्त्विके

(१.७.४४१) शृङ्गारवीरकरुणाऽद्भुतहास्यभयानकाः

Love emotion (3), Heroism (2), Tenderness (7), Merriment (3), Disgust(2)

(१.७.४४२) बीभत्सरौद्रौ च रसाः शृङ्गारः शुचिरुज्ज्वलः

(१.७.४४३) उत्साहवर्धनो वीरः कारुण्यं करुणा घृणा

(१.७.४४४) कृपा दयाऽनुकम्पा स्यादनुक्रोशोऽप्यथो हसः

(१.७.४४५) हासो हास्यं च बीभत्सं विकृतं त्रिष्विदं द्वयम्

Wonderment (4), Terror (9), Anger or horror (2), Fear (6)

(१.७.४४६) विस्मयोऽद्भुतमाश्चर्यं चित्रमप्यथ भैरवम्

(१.७.४४७) दारुणं भीषणं भीष्मं घोरं भीमं भयानकम्

(१.७.४४८) भयङ्करं प्रतिभयं रौद्रं तूग्रममी त्रिषु

(१.७.४४९) चतुर्दश दरस्त्रासो भीतिर्भीः साध्वसं भयम्

Mental sentiment or attitude (1), Expression of it (1)

(१.७.४५०) विकारो मानसो भावोऽनुभावो भावबोधकः

Pride (5), Arrogance (6), Disrespect (9)

(१.७.४५१) गर्वोऽभिमानोऽहङ्कारो मानश्चित्तसमुन्नतिः

(१.७.४५२) दर्पोऽवलोकोऽवष्टम्भश्चित्तोद्रेकः स्मयो मदः

(१.७.४५३) अनादरः परिभवः परीभावस्तिरस्क्रिया

(१.७.४५४) रीढाऽवमाननाऽवज्ञाऽवहेलनमसूर्क्षणम्

Modesty or shame (5), Bashfulness (1)

(१.७.४५५) मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा साऽपत्रपाऽन्यतः

Patience, tolerance (2), Greed (for other's property) (1)

(१.७.४५६) क्षान्तिस्तितिक्षाऽभिध्या तु परस्य विषये स्पृहा

Jealousy or envy (2), Nitpicking (1), Enmity (3), Grief (3)

(१.७.४५७) अक्षान्तिरीर्ष्याऽसूया तु दोषाऽऽरोपो गुणेष्वपि

(१.७.४५८) वैरं विरोधो विद्वेषो मन्युशोकौ तु शुक् स्त्रियाम्

Repentance (3), Wrath or rage (7)

(१.७.४५९) पश्चात्तापोऽनुतापश्च विप्रतीसार इत्यपि

(१.७.४६०) कोपक्रोधाऽमर्षरोषप्रतिघा रुट् कृधौ स्त्रियौ

Character or good conduct (1), Insanity (2)

(१.७.४६१) शुचौ तु चरिते शीलमुन्मादश्चित्तविभ्रमः

Affection or kindness (3), Desire or wish (12), Lust (1)

(१.७.४६२) प्रेमा ना प्रियता हार्दं प्रेमस्नेहोऽथ दोहदम्

(१.७.४६३) इच्छा काङ्क्षा स्पृहेहा तृड् वाञ्छा लिप्सा मनोरथः

(१.७.४६४) कामोऽभिलाषस्तर्षश्च सोऽत्यर्थं लालसा द्वयोः

Moral reflection (1), Mental decease (1) Recollection (3) Anxiety (2)

(१.७.४६५) उपाधिर्ना धर्मचिन्ता पुंस्याधिर्मानसी व्यथा

(१.७.४६६) स्याच्चिन्ता स्मृतिराध्यानमुत्कण्ठोत्कलिके समे

Perseverance or enthusiasm (2), Fortitude (1)

(१.७.४६७) उत्साहोऽध्यवसायः स्यात् स वीर्यमतिशक्तिभाक्

Fraud or deceit (9), Carelessness or error (2)

(१.७.४६८) कपटोऽस्त्री व्याजदम्भोपधयश् छद्मकैतवे

(१.७.४६९) कुसृतिर्निकृतिः शाठ्यं प्रमादोऽनवधानता

Eagerness or curiosity (4), Women's affectionate actions (six listed) (1)

(१.७.४७०) कौतूहलं कौतुकं च कुतुकं च कुतूहलम्

(१.७.४७१) स्त्रीणां विलासबिब्बोकविभ्रमा ललितं तथा

(१.७.४७२) हेला लीलेत्यमी हावाःक्रियाः शृङ्गारभावजाः

Sport or amusement (6), Concealment or disguise (3)

(१.७.४७३) द्रवकेलिपरीहासाः क्रीडा लीला च नर्म च

(१.७.४७४) व्याजोऽपदेशो लक्ष्यं च क्रीडा खेला च कूर्दनम्

Sweat (3), Unconsciousness (2), camouflage (2), Excitement or hurry (2)

(१.७.४७५) घर्मो निदाघः स्वेदः स्यात्प्रलयो नष्टचेष्टता

(१.७.४७६) अवहित्थाकारगुप्तिः समौ संवेगसंभ्रमौ

Three laughs: loud articulated (1), smile (1), laugh (1), Thrill (goosepimples) (2)

(१.७.४७७) स्यादाच्छुरितकं हासः सोत्प्रासः स मनाक् स्मितम्

(१.७.४७८) मध्यमः स्याद्विहसितं रोमाञ्चो रोमहर्षणम्

Weeping (3), Yawning (2), Dishonest talk (2), Deviation or failure (2)

(१.७.४७९) क्रन्दितं रुदितम् क्रुष्टं जृम्भस्तु त्रिषु जृम्भणम्

(१.७.४८०) विप्रलम्भो विसंवादो रिङ्गणं स्खलनं समे

Sleep (5), Sleepiness or lassitude (2), Frown (3)

(१.७.४८१) स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपि

(१.७.४८२) तन्द्री प्रमीला भ्रकुटिर्भ्रुकुटिर्भ्रूकुटिः स्त्रियाम्

(Angry) staring (1), Natural state or nature (5), trembling (2), Elation or festival (5)

(१.७.४८३) अदृष्टिः स्यादसौम्येऽक्षिण संसिद्धिप्रकृती त्विमे

(१.७.४८४) स्वरूपं च स्वभावश्च निसर्गश्चाथ वेपथुः

(१.७.४८५) कम्पोऽथ क्षण उद्धर्षो मह उद्धव उत्सवः

पातालभोगिवर्गः

Nether world (5), Hole or empty space (11)

The word सुषिरंhas a variant शुषिरं. Similar for सुषिःalso

(१.८.४८६) अधोभुवनपातालं बलिसद्म रसातलम्

(१.८.४८७) नागलोकोऽथ कुहरं सुषिरं विवरं बिलम्

(१.८.४८८) छिद्रं निर्व्यथनं रोकं रन्ध्रं श्वभ्रं वपा सुषिः

Hole in the ground (2), Darkness (5), Complete darkness (1), Partial darkness (1)

(१.८.४८९) गर्ताऽवटौ भुवि श्वभ्रे सरन्ध्रे सुषिरं त्रिषु

(१.८.४९०) अन्धकारोऽस्त्रियां ध्वान्तं तमिस्रं तिमिरं तमः

(१.८.४९१) ध्वान्ते गाढेऽन्धतमसं क्षीणेऽवतमसं तमः

Universal darkness (1), Snake (2), King of snakes (2), A type of snake (2), Pyth

(१.८.४९२) विष्वक्संतमसं नागाः काद्रवेयास्तदीश्वरे

(१.८.४९३) शेषोऽनन्तो वासुकिस्तु सर्पराजोऽथ गोनसे

(१.८.४९४) तिलित्सः स्यादजगरे शयुर्वाहस इत्युभौ

Water snake (2), A type of non-poisonous snake (2), A variegated snake (2), Shedded snake (2)

(१.८.४९५) अलगर्दो जलव्यालः समौ राजिलडुण्डुमौ

(१.८.४९६) मालुधानो मातुलाहिर्निर्मुक्तो मुक्तकञ्चुकः

Snake or serpent (33)

(१.८.४९७) सर्पः पृदाकुर्भुजगो भुजङ्गोऽहिर्भुजङ्गमः

(१.८.४९८) आशीविषो विषधरश्चक्री व्यालः सरीसृपः

(१.८.४९९) कुण्डली गूढपाच्चक्षुःश्रवाः काकोदरः फणी

(१.८.५००) दर्वीकरो दीर्घपृष्ठो दन्दशूको बिलेशयः

(१.८.५०१) उरगः पन्नगो भोगी जिह्मगः पवनाशनः

(१.८.५०२) लेलिहानो द्विरसनो गोकर्णः कञ्चुकी तथा

(१.८.५०३) कुम्भीनसः फणधरो हरिर्भोगधरस्तथा

Body of a snake (1), Fang (2), Pertaining to a snake (1), Hood of a snake(2)

(१.८.५०४) अहेः शरीरं भोगः स्यादाशीरप्यहिदंष्ट्रिका

(१.८.५०५) त्रिष्वाहेयं विषाऽस्थ्यादि स्फटायां तु फणा द्वयोः

Snake's venom (3), List of nine specific venoms

(१.८.५०६) समौ कञ्चुकनिर्मोकौ क्ष्वेडस्तु गरलं विषम्

(१.८.५०७) पुंसि क्लीबे च काकोलकालकूटहलाहलाः

(१.८.५०८) सौराष्ट्रिकः शौक्लिकेयो ब्रह्मपुत्रः प्रदीपनः

(१.८.५०९) दारदो वत्सनाभश्च विषभेदा अमी नव

Poison expert (2), Snake catcher (2)

(१.८.५१०) विषवैद्यो जाङ्गुलिको व्यालग्राह्यहितुण्डिकः

### नरकवर्गः

Hell (4), Six specific hells listed, (Hell-bound) souls (1), River in hell (1), Misery (in hell) (1)

(१.९.५११) स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रियाम्
(१.९.५१२) तद्भेदास्तपनाऽवीचिमहारौरवरौरवाः
(१.९.५१३) संघातः कालसूत्रं चेत्याद्याः सत्त्वास्तु नारकाः
(१.९.५१४) प्रेता वैतरणी सिन्धुः स्यादलक्ष्मीस्तु निर्तिः

Condemnation (to hell) (2), Agony (3)

(१.९.५१५) विष्टिराजूः कारणा तु यातना तीव्रवेदना

Pain or suffering of various types (9)

(१.९.५१६) पीडा बाधा व्यथा दुःखमामनस्यं प्रसूतिजम्
(१.९.५१७) स्यात्कष्टं कृच्छ्रमाभीलं त्रिष्वेषां भेद्यगामि यत्

### वारिवर्गः

Sea or ocean (15), Specific oceans (two listed)

(१.१०.५१८) समुद्रोऽब्धिरकूपारः पारावारः सरित्पतिः
(१.१०.५१९) उदन्वानुदधिः सिन्धुः सरस्वान्सागरोऽर्णवः
(१.१०.५२०) रत्नाकरो जलनिधिर्यादःपतिरपाम्पतिः
(१.१०.५२१) तस्य प्रभेदाः क्षीरोदो लवणोदस्तथाऽपरे

Water (27), watery (2)

(१.१०.५२२) आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलं
(१.१०.५२३) पयः कीलालममृतं जीवनं भुवनं वनम्
(१.१०.५२४) कबन्धमुदकं पाथः पुष्करं सर्वतोमुखम्
(१.१०.५२५) अम्भोर्णस्तोयपानीयनीरक्षीरोऽम्बुशम्बरम्
(१.१०.५२६) मेघपुष्पं घनरसस्त्रिषु द्वे आप्यमम्मयम्

Wave (4), Big wave (2), Whirlpool (1), Droplet (4)

(१.१०.५२७) भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिरथोर्मिषु
(१.१०.५२८) महत्सूल्लोलकल्लोलौ स्यादावर्तोऽम्भसां भ्रमः
(१.१०.५२९) पृषन्ति बिन्दुपृषताः पुमांसो विप्रुषः स्त्रियाम्

Circular motion in a water drain (4), Bank or shore (5)

(१.१०.५३०) चक्राणि पुटभेदाः स्युर्भ्रमाश्च जलनिर्गमाः
(१.१०.५३१) कूलं रोधश्च तीरं च प्रतीरं च तटं त्रिषु

Two banks listed, The channel or bed of a river (1)

(१.१०.५३२) पारावारे परार्वाची तीरे पात्रं तदन्तरम्

Island (2), Islet in the river bank (1), Sandy beach (2)

(१.१०.५३३) द्वीपोऽस्त्रियामन्तरीपं यदन्तर्वारिणस्तटम्
(१.१०.५३४) तोयोत्थितं तत्पुलिनं सैकतं सिकतामयम्

Mud or clay (5), Overflow (2), Ditches (for water) made in dry beds (2)

(१.१०.५३५) निषद्वरस्तु जम्बालः पङ्कोऽस्त्री शादकर्दमौ
(१.१०.५३६) जलोच्छ्वासाः परीवाहाः कूपकास्तु विदारकाः

Navigable (1), Boat (3), Raft or small boat (3), Stream of water (1)

(१.१०.५३७) नाव्यं त्रिलिङ्गं नौतार्ये स्त्रियां नौस्तरणिस्तरिः
(१.१०.५३८) उडुपं तु प्लवः कोलः स्रोतोऽम्बुसरणं स्वतः

Toll (for crossing river) (2), Wooden water carrier (1), Merchants on waterways (2), Helmsman (2)

(१.१०.५३९) आतरस्तरपण्यं स्याद् द्रोणी काष्टाम्बुवाहिनी
(१.१०.५४०) सांयात्रिकः पोतवणिक् कर्णधारस्तु नाविकः

Steersman or rower (2), Mast (2), Oar (2), Rudder (2)

(१.१०.५४१) नियामकाः पोतवाहाः कूपको गुणवृक्षकः
(१.१०.५४२) नौकादण्डः क्षेपणी स्यादरित्रं केनिपातकः

Scraper or shovel (2), Bucket (2), Half of a boat (1), Alit (1)

(१.१०.५४३) अभ्रिः स्त्री काष्टकुद्दालः सेकपात्रं तु सेचनम्
(१.१०.५४४) क्लीबेऽर्धनावं नावोऽर्धेऽतीतनौकेऽतिनु त्रिषु

Clear or transparent (2), Turbid (3), Deep (3), Shallow (1)

(१.१०.५४५) त्रिष्वागाधात्प्रसन्नोऽच्छः कलुषोऽनच्छ आविलः
(१.१०.५४६) निम्नं गभीरं गम्भीरमुत्तानं तद्विपर्यये

Bottomless or very deep (2), Fisherman (3), (Fishing) net (2), (Hemp) rope (2)

(१.१०.५४७) अगाधमतलस्पर्शे कैवर्ते दाशधीवरौ
(१.१०.५४८) आनायः पुंसि जालं स्याच्छणसूत्रं पवित्रकम्

Fish storage (2), Fishing (2), Fish (8), Specific (flat) fish (2)

(१.१०.५४९) मत्स्याधानी कुवेणी स्याद् बडिशं मत्स्यवेधनम्
(१.१०.५५०) पृथुरोमा झषो मत्स्यो मीनो वैसारिणोऽण्डजः
(१.१०.५५१) विसारः शकुली चाथ गडकः शकुलार्भकः

Porpoise (2), Specific small fish (2), Type of carp (2), Type of white fish (2)

(१.१०.५५२) सहस्रदंष्ट्रः पाठीन उलूपी शिशुकः समौ
(१.१०.५५३) नलमीनश्चिलिचिमः प्रोष्ठी तु शफरी द्वयोः

Tiny fish (1), List of specific seven fishes, Aquatic creatures (2)

(१.१०.५५४) क्षुद्राण्डमत्स्यसंघातः पोताधानमथो झषाः
(१.१०.५५५) रोहितो मद्गुरः शालो राजीवः शकुलस्तिमिः
(१.१०.५५६) तिमिङ्गलादयश्चाथ यादांसि जलजन्तवः

List of four aquatic creatures, Crab (2), Turtle or tortoise (3)

(१.१०.५५७) तद्भेदाः शिशुमारोद्रशङ्कवो मकरादयः
(१.१०.५५८) स्यात्कुलीरः कर्कटकः कूर्मे कमठकच्छपौ

Shark (2), Crocodile (2), Worm (3), Crocodile in Ganges (2)

(१.१०.५५९) ग्राहोऽवहारो नक्रस्तु कुम्भीरोऽथ महीलता

(१.१०.५६०) गण्डूपदः किञ्चुलको निहाका गोधिका समे

Leech (3), Pearl oyster (2), Conch (2)

(१.१०.५६१) रक्तपा तु जलौकायां स्त्रियां भूम्नि जलौकसः

(१.१०.५६२) मुक्तास्फोटः स्त्रियां शुक्तिः शङ्खः स्यात्कम्बुरस्त्रियौ

Small shell (2), Bivalve shell (2), Frog (6)

(१.१०.५६३) क्षुद्रशङ्खाः शङ्खनखाः शम्बूका जलशुक्तयः

(१.१०.५६४) भेके मण्डूकवर्षाभूशालूरप्लवदर्दुराः

Small worm (2), Female frog (2), Female turtle (2)

(१.१०.५६५) शिली गण्डूपदी भेकी वर्षाभ्वी कमठी डुलिः

Female sheat fish (1), Cocle (2), Lake or pond (2), Deep lake (1)

(१.१०.५६६) मद्गुरस्य प्रिया शृङ्गी दुर्नामा दीर्घकोशिका

(१.१०.५६७) जलाशया जलाधारास्तत्रागाधजलो ह्रदः

Trough near a well (2), Well (4)

(१.१०.५६८) आहावस्तु निपानं स्यादुपकूपजलाशये

(१.१०.५६९) पुंस्येवाऽन्धुः प्रहिः कूप उदपानं तु पुंसि वा

Wooden contraption for extracting water from well (1), Facing of well

(१.१०.५७०) नेमिस्त्रिकास्य वीनाहो मुखबन्धनमस्य यत्

Square or large pond (2), Natural pond (2)

(१.१०.५७१) पुष्करिण्यां तु खातं स्यादखातं देवखातकम्

Deep pond or tank (5), Basin (2), Large circular reservoir (2)

(१.१०.५७२) पद्माकरस्तडागोऽस्त्री कासारः सरसी सरः

(१.१०.५७३) वेशन्तः पल्वलं चाल्पसरो वापी तु दीर्घिका

Moat or ditch (2), Dike or dam (1), Watering basin around a tree (3), River (16)

(१.१०.५७४) खेयं तु परिखाधारस्त्वम्भसां यत्र धारणम्

(१.१०.५७५) स्यादालवालमावालमावापोऽथ नदी सरित्

(१.१०.५७६) तरङ्गिणी शैवलिनी तटिनी ह्रादिनी धुनी

(१.१०.५७७) स्रोतस्विनी द्वीपवती स्रवन्ती निम्नगाऽपगा

(१.१०.५७८) कूलङ्कषा निर्झरिणी रोधोवक्रा सरस्वती

River Ganges (8)

(१.१०.५७९) गङ्गा विष्णुपदी जह्नुतनया सुरनिम्नगा

(१.१०.५८०) भागीरथी त्रिपथगा त्रिस्रोता भीष्मसूरपि

River Yamuna (4), River Narmada (4)

(१.१०.५८१) कालिन्दी सूर्यतनया यमुना शमनस्वसा

(१.१०.५८२) रेवा तु नर्मदा सोमोद्भवा मेकलकन्यका

River created at the time of Gauri's marriage (2), River brought down by कार्तवीर्यार्जुन(2)

(१.१०.५८३) करतोया सदानीरा बाहुदा सैतवाहिनी

River Shatardu (2), River Vipasha (2), River Shona (2), Canal (1)

(१.१०.५८४) शतद्रुस्तु शुतुद्रिः स्याद्विपाशा तु विपाट् स्त्रियाम्

(१.१०.५८५) शोणो हिरण्यवाहः स्यात्कुल्याऽल्पा कृत्रिमा सरित्

List of five rivers, additional list includes: कौशिकी, गण्डकी, चर्मण्वती,गोदा, वेणी etc.

Mouth of a river (1), Channel or water-course (1)

(१.१०.५८६) शरावती वेत्रवती चन्द्रभागा सरस्वती

(१.१०.५८७) कावेरी सरितोऽन्याश्च सम्भेदः सिन्धुसङ्गमः

(१.१०.५८८) द्वयोः प्रणाली पयसः पदव्यां त्रिषु तूत्तरौ

Things born in a river देविकाor सरयू: sample construction

(१.१०.५८९) देविकायां सरय्वां च भवे दाविकसारवौ

Night-blooming lotus: White (2), Red (2)

(१.१०.५९०) सौगन्धिकं तु कल्हारं हल्लकं रक्तसंध्यकम्

Water lily (2), Blue (2), White (2), Root (of) lily (1), Pistia Stratiotes (2)

(१.१०.५९१) स्यादुत्पलं कुवलयमथ नीलाम्बुजन्म च

(१.१०.५९२) इन्दीवरं च नीलेऽस्मिन्सिते कुमुदकैरवे

(१.१०.५९३) शालूकमेषां कन्दः स्याद्वारिपर्णी तु कुम्भिका

Aquatic plant, moss (3), Full of lilies (2), Full of lotuses (3)

(१.१०.५९४) जलनीली तु शैवालं शैवलोऽथ कुमुद्वती

(१.१०.५९५) कुमुदिन्यां नलिन्यां तु विसिनीपद्मिनीमुखाः

Lotus (16)

(१.१०.५९६) वा पुंसि पद्मं नलिनमरविन्दं महोत्पलम्

(१.१०.५९७) सहस्रपत्रं कमलं शतपत्रं कुशेशयम्

(१.१०.५९८) पङ्केरुहं तामरसं सारसं सरसीरुहम्

(१.१०.५९९) बिसप्रसूनराजीवपुष्कराऽम्भोरुहाणि च

Lotus: white (2), red (3), Stalk of water lily (3)

(१.१०.६००) पुण्डरीकं सिताम्भोजमथ रक्तसरोरुहे

(१.१०.६०१) रक्तोत्पलं कोकनदं नालो नालमथाऽस्त्रियाम्

Lotus fibre (2), Collection of water lilies (1)

The words खण्डाor षण्डmean an assemblage in general.

(१.१०.६०२) मृणालं बिसमब्जादिकदम्बे खण्डमस्त्रियाम्

Parts of water lily: root (2), filament (2), new leaf (2), Lotus seed (2)

(१.१०.६०३) करहाटः शिफाकन्दः किञ्जल्कः केसरोऽस्त्रियाम्

(१.१०.६०४) संवर्तिका नवदलं बीजकोशो वराटकः

काण्डसमाप्तिः।

All the 10 sections of the first part with main and related words are thus finished.

(१.११.६०५) उक्तं स्वर्व्योमदिक्कालधीशब्दादि सनाट्यकम्

(१.११.६०६) पातालभोगिनरकं वारि चैषां च सङ्गतम्

(१.११.६०७) इत्यमरसिंहकृतौ नामलिङ्गानुशासने
(१.११.६०८) स्वरादिकाण्डः प्रथमः साङ्ग एव समर्थितः

Encoded by Avinash Sathaye sohum@ms.uky.edu

---

Please send corrections to sanskrit@cheerful.com
Last updated July 1, 2001